शप्श्यनोर्नित्यम् ॥ ३४ ॥

शपश्यनोरवर्ण (वन्ता ? वा)न्तादनन्तरस्य शतुः शीङ्योः परतो नित्यं नुमागमो भवति । भवन्ती कुले । भवन्ती स्त्री । दीव्यन्ती कुले । दीव्यन्ती स्त्री ॥

सावनडुहः ॥ ३५ ॥

अनडुहः प्रकृतिसम्बन्धिनि सौ परतोऽवर्णात् परो नुमागमो भवति । अनड्वान् । हे अनड्वन् ! । प्रियानड्वान् । हे प्रियानड्वन् ! । आदित्यनुवर्तते । अनामोः कृतयोर्नुम् भवति । तम नु(मा ? मौ) न वा(ध्य ? ध्ये)ते, आ(मा ? म्भ्यां) च नुमिति ॥

दिव औत् ॥ ३६ ॥

दिवित्येतस्य प्रातिपदिकस्य प्रकृतेः सम्बन्धिनि सौ परत औदित्ययमादेशो भवति । द्यौः । हे द्यौः । प्रियद्यौः । निरनुबन्धकस्य ग्रहणाद्धातोर्न भवति । अक्षद्यूः । सा(दि ? वि)त्येव । दिवं पश्य ॥

पथिमथ्यृभुक्षामात् ॥ ३७ ॥

पथ्यादीनां प्रकृतिसम्बन्धिनि सौ परत आकारः अन्तादेशो भवति । पन्थाः । मन्थाः । ऋभुक्षाः । हे पन्थाः । अपन्थाः । 'पथो वा' (५-४-८५) इति समासान्ताभावः । साविति किम् । पथिभ्यां पथिभिः ॥

शिसुट्ये(१)त ॥ ३८

शौ सुटि परतः पथ्यादीनामिकारस्यात् भवति । सुपन्थानि वनानि । 'पूजा(यां?) स्वतिभ्याम्'---(५-४-८३) इति समासान्तप्रतिषेधः । बहुमन्थानि कुलानि । अ(ति)ऋभुक्षाणि बलानि । पन्थानौ । पन्थानः । पन्थानम् । पन्थानौ । एवं मन्थानौ । मन्थानः । ऋभुक्षाणौ । ऋभुक्षाणः । भेदेन शिग्रहणादन्यत्र सुटि नपुंसके न भवति । (सुपथि वने पश्य ?)*

१ 'ट्ये' । ग, 'ट्योत' क. पाठः.

* इत उत्तरं चतुर्दशसूत्राणि मद्रासपुस्तके मातृकायां न दृश्यन्ते । कोष्ठकान्तर्गतानि सूत्राणि सूत्रपाठादुद्धृत्य संयोजितानि ।

थो न्थः ॥ ३९ ॥

इनोऽचि लोपः ॥ ४० ॥

पुंसोऽसुङ् ॥ ४१ ॥

ओत औत् ॥ ४२ ॥

सख्युरितोऽशावैत् ॥ ४३ ॥

ऋदुशनस्फुरुदंसोनेहसां चानङ् सौ ॥ ४४ ॥

न सम्बुद्धौ ॥ ४५ ॥

अञ्च वोशनसः ॥ ४६ ॥

क्रुशस्तुनस्तृच् ॥ ४७ ॥

*टा (टा? दा)वजादौ वा ॥ ४८ ॥

*स्त्रियाम् ॥ ४९ ॥

आमनडुहो वा ॥ ५० ॥

†चतु(सु ? र)श्च शि सुटि ॥ ५१ ॥

(अ?अं) सम्बुद्धौ ॥ ५२ ॥

अष्टनो वा सुप्यात् ॥ ५३ ॥

अष्टन्शब्दस्य सुपि आकारोऽन्तादेशो (वा) भवति। अष्टाभिः, अष्टभिः। प्रियाष्टा। प्रियाष्टौ। प्रियाष्टानो। सुपीति किम्। अष्टकः सङ्घः। अष्टत्वम् ॥

रायो हलि ॥ ५४ ॥

रैशब्दस्य हलादौ सुपि परत आकारादेशो भवति। राः। राभ्याम्। राभिः। एकदेशविकृतस्यानन्यत्वादतिराभ्याम्। हलीति किम्। रायौ। सुपीत्येव। रैत्वम् ॥

* सूत्रद्वयमिदमेकीकृत्य पठितं M. U S. पाठे.

† सूत्रमिदं विभज्य पठितं M. U. S. पाठे.

युष्मदस्मदोरनादेशे ॥ ५५ ॥

युष्मदस्मदित्येतयोरनादेशरूपे सुपि आकारोऽन्तादेशो भवति। युवाभ्याम्। आवाभ्याम्। अतियुवाभ्याम्। अत्यावाभ्याम्। अनादेश इति किम्। युष्मभ्यम्। अस्मभ्यम्। अथ हलीत्यनुवर्तते तदुत्तरार्थम्॥

औशस्स्सु ॥ ५६ ॥

प्रथमाद्वितीयाद्विवचने औकारे शसि अमि च परतो युष्मदस्मदो-राकारादेशो भवति। युवाम्। आवाम्। अतियुवाम्। अत्यावाम्। युष्मान्। अस्मान्। अतियुष्मान्। अत्यस्मान्। त्वाम्। माम्। अतित्वाम्। अतिमाम्। अनादेशत्वात् पूर्वेण न प्राप्नोति इति वचनम्। एष्विति किम्। त्वम्। अहम्॥

योऽचि ॥ ५७ ॥

युष्मदस्मदोरजादौ (सुपि) परतो यकारोऽन्तादेशो भवति। त्वया। मया। त्वयि। मयि। युवयोः। आवयोः। अतित्वया। अतिमया। अनादेश इत्येव। त्वत्। मत्॥

शेषे लोपः ॥ ५८ ॥

यत्रा(कार)यकारौ विहितौ, ततोऽन्यस्मिन् सुपि युष्मदस्मदोरन्त्यस्य लोपो भवति। त्वम्। अहम्। यूयम्। वयम्। अतित्वम्। अत्यहम्। अतियूयम्। अतिवयमित्यादि॥

मान्तस्य युवावौ द्विवचने ॥ ५९ ॥

द्वित्वविशिष्टेऽर्थे वर्तमानयोर्युष्मदस्मदोर्मान्तस्य सुपि यथासङ्ख्यं युव आव इत्येतावादेशौ भवतः। युवाम्। आवाम्। युवाभ्याम्। आवाभ्याम्। अतिक्रान्तो युवाम् अतियुवाम्।

*यूयवयौ जसि ॥ ६० ॥

अस्मान् वा अतियूयम्, अतिवयम्। मान्तस्येत्येव। यूयकं वयकम्॥

* सूत्रमिदं श्रुतिभ्रं वगातृकायाः छो।

त्वाहौ सौ ॥ ६१ ॥

युष्मदस्मदोर्मान्तस्य सौ प्रत्यये यथासङ्ख्यं त्व(म्?) अह(म्?) इत्येतावादेशौ भवतः । त्वम् । अहम् । अतिक्रान्तस्त्वां युवां युष्मान् वा, माम् आवाम् अस्मान् वा अतित्वम्, अत्यहम् । मान्तस्येत्येव । त्वकम् । अहकम् ॥

तुभ्यमह्यौ ङयि ॥ ६२ ॥

ङयि प्रत्यये युष्मदस्मदोर्मान्तस्य तुभ्य मह्य इत्येतावादेशौ भवतः । तुभ्यम् । मह्यम् । अतिक्रान्ताय त्वां (युवां) युष्मान् वा, मामावामस्मान् वा अतितुभ्यम्, अतिमह्यम् । मान्तस्येत्येव । तुभ्यकम् । मह्यकम् ॥

तवममौ ङसि ॥ ६३ ॥

युष्मदस्मदोर्मान्तस्य ङसि प्रत्यये यथासङ्ख्यं तव मम इत्येतावादेशौ भवतः । तव । मम । अतिक्रान्तस्य त्वां युवां युष्मान् वा, मामावामस्मान्वा अतितव, अतिमम । मान्तस्येत्येव । तव(क) । ममक ॥

त्वमावेकस्मिन् ॥ ६४ ॥

एकत्वविशिष्टेऽर्थे वर्तमानयोर्युष्मदस्मदोः सुपि मान्तस्य त्व म इत्येतावादेशौ भवतः । त्वां माम् । त्वया मया । त्वत् मत् । त्वयि मयि । अतिक्रान्तौ त्वाम् अतित्वाम् । अतिमाम् । अतिक्रान्तान् त्वाम् अतित्वान् । अतिमान् । जस्सुङे(ङ)स्सु पुनः पूर्वविप्रतिषेधेन यूयवयादयो यथोद्दृता एव भवन्ति । एकस्मिन्निति किम् । युष्माकम् । अस्माकम् । अतिक्रान्तेन युष्मान् अतियुष्मया अत्यस्मयेति ॥

प्रत्ययोत्तरपदयोश्च ॥ ६५ ॥

एकस्मिन्नर्थे वर्तमानयोर्युष्मदस्मदोः प्रत्यये उत्तरपदे च परतो मान्तस्य त्वमावादेशौ भवतः । तवायं त्वदीयः । मदीयः । त्वया कृतं त्वत्कृतम् । मान्तस्येत्येव । त्वकं पिता अस्य त्वकत्पितृकः । मकत्पितृकः । अन्तरङ्गत्वाद्वाक्यावस्थायामेव प्रागेव बहुव्रीहेरकज् भवति । ननु चान्तर्वर्तिनं सुपमाश्रित्यैकस्मिन्नर्थे वर्तमानयोर्युष्मदस्मदोः प्रत्ययोत्तरपदयोरपि त्वमौ

भविष्यतः । सत्यमेतत् । किन्त्वनेनैतत् ज्ञापयति—अन्तर्वर्तिनं सुपमाश्रित्य प्रत्ययोत्तरपदयोर्युवादयो न भवन्ति (इति) ॥

त्रिचतुरोः स्त्रियां तिसृचतसृ ॥ ९९ ॥

त्रि चतुरित्येतयोः स्त्रियां वर्तमानयोः स्वसम्बन्धिनि प्रकृतिसंबन्धिनि वा सुपि प्रत्यये परतो यथासङ्ख्यं तिसृ चतसृ इत्येतावादेशौ भवतः । तिस्रस्तिष्ठन्ति । चतस्रः पश्य । प्रियास्तिस्रोऽस्य प्रियतिसा (सोऽसौ) ब्राह्मणः । प्रियतिस्रौ । प्रियचतसा । प्रियचतस्रौ । प्रियतिसृ कुलम् । प्रियचतसृ(णि?) । स्त्रियामिति किम् । त्रयः । चत्वारः । त्रीणि । चत्वारि । प्रियास्त्रयस्त्रीणि वा अस्याः प्रियत्रिः । प्रियचत्वाः । अत्र त्रिचतुरावस्त्रियाम् । समास एव स्त्रियामित्यादेशौ न भवतः । सुपीत्येव । तिसृभ्य आगतं त्रिरूप्यम् । चतूरूप्यम् । तिसृणां प्रियः (त्रिप्रियः । चतसृणां प्रियः चतुष्प्रियः । कथं तर्हि प्रियतिसृ कुलम् । प्रियचतसृ कुलमिति । क्वचिल्लुमता लुप्ते प्रत्ययलक्षणं भवति । यथा हे त्रपो । इति सम्बुद्धिगुणः ॥

तिसृका संज्ञायाम् ॥ ९७ ॥

संज्ञायां विषये कप्रत्यये त्रिशब्दस्य तिसृभावो निपात्यते । तिसृका नाम ग्रामः ॥

अचि र ऋतः ॥ ९८ ॥

तिसृ चतसृ (इत्येतयोः) ऋकारस्याजादौ सुपि रादेशो भवति । तिस्रः । चतस्रः । प्रियतिस्र आगतम् । प्रियचतस्र आगतम् । प्रियतिस्रः स्वम् । प्रियचतस्रः स्वम् । प्रियतिस्रि निधेहि । पूर्वसवर्णोत्वङिसुड्गुणान् अपवादत्वाद् बाधते । (नुड्नुम्नुटस्तु)भ्यान्तु पूर्वविप्रतिषेधेन बाध्यते । तिसृणाम् । चतसृणाम् । प्रियतिसृणि । अचीति किम् । तिसृभिः । चतसृभिः ॥

जराया जरस् वा ॥ ९९ ॥

जराशब्दस्य स्वसम्बन्धिनि (प्रकृतिसंबन्धिनि) वा सुप्यजादौ प्रत्यये जरसित्ययमादेशो वा भवति । जरसौ । जरसः । जरे । जराः । एकदेशविकृत-

स्यानन्यत्वाद् अतिजरसौ, अतिजरौ । सन्निपातलक्षणपरिभाषाया अतो भिस ऐस्करणेनानित्यत्वस्य ज्ञापितत्वात् अतिजरसैः, अतिजरेण । अतिजरसैः, अतिजरैः । अतिजरसे, अतिजराय । अतिजरसाम्, अतिजराणाम् । नपुंसके सोरम्भावेऽतिजरसम्, अतिजरम् । अतिजरसी, अतिजरे । शेः परत्वाज्जरसादेशः । ततो नुम् । अतिजरांसि, अतिजराणि । स्त्रियान्तु याप विभक्तेर्व्यवधानात् न भवति । अचीत्येव । जराभ्याम् ॥

त्यदादीनां तसादिषु चाद्वेरः ॥ ७० ॥

त्यदादीनां द्विपर्यन्तानां स्वसम्बन्धिनि सुपि तसादिषु प्रत्ययेषु अकारोऽन्तादेशो भवति । (त्य॰स्यः) । सः । यः । एषः । इमौ । अमू । द्वौ । परमस्यः । ततः । तत्र । यतः । यत्र । त्यदादिसम्बन्धिविज्ञानादत्र न भवति । अतितद् अतितदौ । आ द्वेरिति किम् । भवान् ॥

किमः कः ॥ ७१ ॥

किमः स्वसम्बन्धिनि सुपि तसादिषु प्रत्ययेषु कादेशो भवति । कः । कौ । के । कुत्र । कति । कथम् । परमकः । स्वसम्बन्धिविज्ञानादिह न भवति—अतिकिम् ।

तस्य सः सौ ॥ ७२ ॥

... ... ... ... ... ... ... ... ... ॥

... ... ... ... ... ... ... प्रियतद् देवदत्तः ॥

अदसो दः ॥ ७३ ॥

अदसो दकारस्य स्वसम्बन्धिनि सौ परतः सकारादेशो भवति । असौ । हे असौ ॥

औ सुलोपश्च ॥ ७४ ॥

अदसस्सौ परतोऽन्त्यस्यौकारः सोर्लोपो भवति । असौ हे असौ ॥

१. 'आद्वे' इति प्र० पु० पाठः ।

अकचि पानौत्वे साद्ध्व ॥ ७५ ॥

अकच्प्रत्यये सति औसुलोपौ वा भवतः । अनौत्वपक्षे सादुत्तरस्योकारो भवति । असकौ असुकः । हे असकौ हे असुकः । असकौ स्त्री असुका ॥

इदमः स्त्रीपुंसयोरियमयमौ ॥ ७६ ॥

इदमः सौ परतः स्त्रियां पुंसि यथासङ्ख्यमियमयमित्येतावादेशौ भवतः । इयं स्त्री । परमेयम् । अयं पुमान् । परमायम् । साविति किम् । इमे । इमौ । स्वसम्बन्धिविज्ञानादतीदं स्त्री । अतीदं पुमान् ॥

दो मः ॥ ७७ ॥

इदमो दकारस्य स्वसम्बन्धिनि सुपि मकारो भवति । इमौ । इमे । इमकौ । परमेमौ । स्वसम्बन्धिविज्ञानादिह न भवति । (अ)तीदमौ । प्रियेदमौ ॥

हल्यनकोऽश् ॥ ७८ ॥

स्वसम्बन्धिनि हलादौ सुपि परत इदमोऽन(क)च्कस्याशित्ययमादेशो भवति । आभ्याम् । एभिः । आभिः । अस्मै । अस्यै । स्वसम्बन्धिविज्ञानादिह न भवति अतदिभ्याम् । अतदिंसु । हलीति किम् । इमौ । इमे । अनक इति किम् । इमकाभ्याम् । इमकस्मै । इमकस्यै । तन्मध्यपतितस्तद्ग्रहणेन गृह्यते (१-२-८०) इति साकचोऽपि स्यादिति प्रतिषेधः । शकारः सर्वादेशार्थः ॥

टौसोरनः ॥ ७९ ॥

टा ओसित्येतयोः स्वसम्बन्धिनोः परत इदमोऽनकच्कस्यान इत्ययमादेशो भवति । अनेन कृतम् । अनयोः स्वम् । अनयोर्निधेहि । परमानेन । परमानयोः । स्वसम्बन्धिविज्ञानादिह न भवति--- अतीदमा । अतीदमोः । अनक इत्येव । इमकेन । इमकया । इमकयोः ॥

## एतस्य चान्वादेशे द्वितीयायां चैनः ॥ ८० ॥

एतच्छन्दस्येदमश्चान्वादेशविषये द्वितीयायां विभक्तौ टाप्रत्यये ओसि च परत एनादेशो भवति। यत्र कस्यचित् किञ्चिद्विधाय तस्यैव वाक्यान्तरेणान्यद्विधीयते सोऽन्वादेशः। एतं वेदमध्यापय, अथो एनं व्याकरणमध्यापय। एतत् कुण्डमानय, अथो एनत् परिवर्त्तय। एतेन रात्रिरधीतां, अथो एनेनाहरप्यधीतम्। एतयोः शोभनं शीलम्, अथो एनयोः प्रभूतं स्वम्। एतयोर्ग्रामयोः सुखमवसाम, अथो एनयोः सम्यगयजामहि। इममध्यापय, अथो एनं भोजय। अनेन रात्रिरधीता, अथो एनेनाहरप्यधीतम्। अनयोः शोभनं शीलम्, अथो एनयोः (प्रभूतं) स्वम्। अनयोर्ग्रामयोः सुखमवसाम, अथो एनयोः सम्यगयजामहि। अन्वादेश इति किम्। देवदत्तमध्यापय। एतं च यज्ञदत्तम्, इममपि विष्णुमित्रम्। यत्रापि वस्तुमात्रनिर्देशं कृत्वा विधानं क्रियते, तत्रोक्तलक्षणस्यान्वादेशस्याभावान्न भवति—"अभिविधौ च यः। एतमातं ङितं विद्याद्"। अयं दण्डो, हरानेनेति ॥

## तृतीयादावश् ॥ ८१ ॥

इदम एतदश्चान्वादेशविषये प्रयोगे तृतीयादौ परतोऽशादेशो भवति। इदमो 'हल्यनकोऽश्'(६-४ ७८) इति सिद्धे पुनर्वचनं साकच्कार्यम्। इमकाभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम्। इमकस्मै, अथो अस्मै। इमकस्मात्, अथो अस्मात्। इमकस्य, अथो अस्य। इमकेषाम्, अथो एषाम्। इमकस्मिन्, अथो अस्मिन्। इमकेषु, अथो एषु। एतदः खल्वपि—एताभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतम्। एवमेतैः, एभिः, एतस्म अस्मै इत्यादि ॥

## पादनिशामासहृदययूषदोषां पन्निशंमासहृद्यूषन् दोषन् शसादौ वा ॥ ८२ ॥

पादप्रभृतीनां शसादौ सुपि यथासंख्यं, पदादय आदेशा (वा) भवन्ति। पदः, पादान्। पदा, पादेन। पद्भ्यां, पादाभ्याम्। निशि,

निशायाम्। मासि, मासे। हृदि, हृदये। यूष्णा, यूषेण। दोष्णा, दोषा। शसादाविति किम्। पादः। निशा। मासः। हृदयम्॥

## आर्धधातुके ॥ ८३ ॥

अधिकारोऽयम्। प्राक् क्विग्रहणाद्यदित ऊर्ध्वमनुक्रमिष्याम आर्धधातुक इत्येतत् तत्र द्रष्टव्यम्॥

## अस्तेर्भूः ॥ ८४ ॥

अस्तेरार्धधातुके विषयभूते भूरित्ययमादेशो भवति। भव्यम्। भविता। भविष्यति। आर्धधातुके इत्येव। अस्ति। अकारासामासेस्त्वादौ तु 'कृभ्वस्तीना'मिति पृथङ्निर्देशान्न भवति। प्रकृत्यन्तरेण सिद्धे वचनमार्धधातुकेऽस्तिनिवृत्त्यर्थम्॥

## ब्रुवो वचिः ॥ ८५ ॥

ब्रुव आर्धधातुके विषये वचिरादेशो भवति। वक्ता। वक्तुम्। उवाच। ऊचे। आर्धधातुक इत्येव। ब्रवीति। ब्रूते। इकार उच्चारणार्थः॥

## चक्षिङः ख्याञवर्जने[1] ॥ ८६ ॥

चक्षिङो वर्जनादन्यत्र वर्तमानस्यार्धधातुकविषये ख्याञादेशो भवति। आख्याता। आख्यास्यति। अवर्जन इति किम्। सञ्चक्ष्य गतः। परिचक्ष्युः। आर्धधातुके इत्येव। आचष्टे। आचक्षाणः। ञकारः फलवद्विवक्षायामात्मनेपदार्थः। केचित् तु क्शादिमादेशं मन्यन्ते। आक्शाता आक्शातुम्। इत्यादि॥

## वा लिटि ॥ ८७ ॥

लिट्यार्धधातुके परतश्चक्षिङः ख्याञादेशो वा भवति। आचख्यौ। आचख्ये। आचचक्षे। आचचक्षाते। क्शादिपक्षे आचक्शौ। आचक्शे॥

---

१. 'ख्याञक्शाञावर्जने' ग. पाठः.

नोससनेषु ॥ ८८ ॥

उस् असु अन इत्येतेषु प्रत्ययेषु परतः चक्षिङः ख्याञित्यादेशो न भवति। चक्षुः। नृचक्षाः। विचक्षण ॥

अजेर्व्यघञपक्यप्सु ॥ ८९ ॥

अजेर्घञादीन् वर्जयित्वा आर्धधातुकविषये वी इत्ययमादेशो भवति। प्रवायकः। प्रवयणीयः। विवाय। वीवान्। अघञपक्यप्सु इति किम्। समाजः। समज। समज्या ॥

तृच्वोर्वा ॥ ९० ॥

तृ यु इत्येतयोः परतः अजेर्वी इत्ययमादेशो (वा) भवति। प्रवेता, प्राजिता। प्रवयणो दण्डः, प्राजनो दण्डः। केचित्तु युवल्योर्वेति[1] वदन्तः प्राजित्य प्राजितमित्याद्यपीच्छन्ति। तत् तु नाद्रियम्। आर्धधातुक इति विषयसप्तम्याश्रयणात् प्रत्ययोत्पत्तेः प्रागेवास्त्यादीनां भू ख्याञ्वीभावा भवन्ति तेन भव्यम् आख्येय प्रवेयम् इति 'अचो यत्' (१-३-१३६) इति यद् भवति ॥

ल्यप्तिकित्यदो जग्धिः ॥ ९१ ॥

ल्यपि तादौ च किति प्रत्यये परतोऽदेर्जग्धिरादेशो भवति। प्रजग्ध्य। जग्ध। जग्धवान्। जग्धा। ल्यपीति किम्। अद्यते। कितीति किम्। अत्ता। कथमन्नम्। अनेरौणादिको नः। जग्धिरितीकार उच्चारणार्थः ॥

लुङ्सनच्घञप्सु घस्लृ ॥ ९२ ॥

अदेः लुङ् सन अच घञ अप् इत्येतेषु परतो घस्लृ इत्ययमादेशो भवति। अघसत्। जिघत्सति। प्रघसः। घासः। विघसः। 'अदेरुपसर्गे' (२-४-८२) इत्यप्। धात्वन्तरेण लुङादि५ . ... ..... दिनिवृत्त्यर्थं वचनम् ॥

---

१ 'युवल्योर्वा' क पाठ

लिटि वा ॥ ९३ ॥

लिटि प्रत्यये परतोऽदेर्घस्लादेशो वा भवति । जघास । जक्षतुः । आद । आदतुः । धात्वन्तरेण सिद्धे लिटि वचनं घसेरसर्वविषय(त्व)ज्ञापनार्थम् । तेन घस्ता घसार इत्यादावेव घसेः प्रयोगो भवति ॥

वेञो वयिः ॥ ९४ ॥

वेञो लिटि प्रत्यये वयीत्यादेशो वा भवति । उवाय । ऊयतुः । ववौ । ववतुः । ऊवतुः । ऊवुः । इकार उच्चारणार्थः ॥

हनो वध लिङि ॥ ९५ ॥

हन्तेर्लिङ्यार्धधातुके परतो वध इत्यादेशो भवति । वध्यात् । वध्यास्ताम् । आवधिषीष्ट । आवधिषीयास्ताम् । आर्धधातुक इत्येव । हन्यात् ॥

लुङि च ॥ ९६ ॥

लुङ्परे चार्धधातुके हन्तेर्वधादेशो भवति । अवधीत् । अवधिष्टाम् । वधादेशस्यादन्तत्वादुपधावृद्धिलक्षणा वृद्धिर्न भवति । योगविभागो लुङ एवोत्तरत्रानुवृत्त्यर्थः ॥

आत्मनेपदे वा ॥ ९७ ॥

आत्मनेपदप्रत्ययलुङ्परे आर्धधातुके परतो हन्तेर्वधादेशो वा भवति । आवधिष्ट । आवधिषाताम् । आहत । आहसाताम् । (अवधि) अघानि । लुङीत्येव आजघ्ने ॥

इणिकोर्गाः ॥ ९८ ॥

इण् इक् इत्येतयोर्लुङ्प्रत्यये गा इत्ययमादेशो भवति । अगात् । अगायि भवता । अध्यगात् । अध्यगायि ॥

णौ गमिरबोधे ॥ ९९ ॥

इणिकोर्बोधनादन्यत्रार्थे णौ गमिरित्ययमादेशो भवति । गमयति ग्रामम् । अधिगमयति प्रियम् । अबोध इति किम् । अर्थान् सम्प्रत्या-

ययन्ति । अबोध इति इणो विशेषणं नत्विकः, असम्भवात् । प्रकृत्यन्तरेण सिद्धे बोधादन्यत्र णाविणो निवृत्त्यर्थं वचनम् ॥

सनि ॥ १०० ॥

इण् इक् इत्येतयोर्बोधनादन्यत्रार्थे सनि प्रत्यये परतो गमिरादेशो भवति । जिगमिषति ग्रामम् । मातुरधिजिगमिषति ग्रामम् । अबोध इत्येव । अर्थान् प्रतीषिषति । योगविभाग उत्तरत्र सन एवानुवृत्त्यर्थः ॥

इङश्च ॥ १०१ ॥

इङो धातोः सन्यार्धधातुके गमिरादेशो भवति । अधिजिगांसते विद्याम् । योगविभाग उत्तरत्र इट एवानुवृत्त्यर्थः ॥

गाङ् लिटि ॥ १०२ ॥

इङो लिट्यार्धधातुके गाङादेशो भवति । अधिजगे । अधिजगाते । ङकारो 'गाङ ई स्य च'(७ २-२६) इति विशेषणार्थः ॥

लुङ्लृङोर्वा ॥ १०३ ॥

लुङि लृङि च प्रत्यये परत इङो गाङादेशो वा भवति । अध्यगीष्ट, अध्यैष्ट । अध्यगीष्यत, अध्यैष्यत । 'गाङ ई स्ये च'(७-२-२६) इति ईकारः ॥

णौ संश्चङोः ॥ १०४ ॥

सन्परे चङ्परे च णिप्रत्यये परत इङो गाङादेशो वा भवति । अधिजिगापयिषति, अध्यापिपयिषति । अध्यजीगपत्, अध्यापिपत् । संश्चङोरिति किम् । अध्यापयति ॥

वलादेरिट् ॥ १०५ ॥

आर्धधातुक इति यत् सप्तम्यन्तमनुवृत्तं तदिह षष्ठ्या विपरिणम्यते । वलादेरार्धधातुकस्येडागमो भवति । लविता । लुलविथ । लविषीष्ट । वलादेरिति किम् । लव्यम् । लवनीयम् । आर्धधातुकस्येत्येव । लूयात् । आस्ते ॥

ग्रहेरस्याऽलिटि दीर्घः ॥ १०६ ॥

ग्रहेः परस्यास्येटो लिटोऽन्यस्मिन् प्रत्यये दीर्घो भवति । ग्रहीतुम् । ग्रहीतव्यम् । अस्येति किम् । जिघ्रक्षिटो मा भूत् । ग्राहिष्यते । अलिटीति किम् । जगृहिव । जगृहिम ॥

वृदृभ्यो वा ॥ १०७ ॥

वृङ्वृञ्भ्याम् ऋकारान्तेभ्यश्च परस्येटो लिटोऽन्यत्र दीर्घो वा भवति । वरिता, वरीता । प्रावरिता, प्रावरीता । तरिता, तरीता । आस्त-रिता, आस्तरीता । वृदृभ्य इति किम् । करिष्यति । तकारो वर्णनिर्दे-शार्थः । अलिटीत्येव । ववरिव । तेरिव ॥

न लिङि ॥ १०८ ॥

(वृङ्? वृदृभ्यः) परस्येटो लिङि प्रत्यये दीर्घो न भवति । वरिषीष्ट । आस्तरिषीष्ट ॥

सिचि परस्मैपदे ॥ १०९ ॥

परस्मैपदपरे सिचि परतो वृदृभ्यः परस्येटो दीर्घो न भवति । प्रावारिष्टाम् । प्रावारिषुः । आस्तारिष्टाम् । आस्तारिषुः । परस्मैपद इति किम् । अवरिष्ट, अवरीष्ट । प्रावरिष्ट, प्रावरीष्ट । आस्तरिष्ट, आस्तरीष्ट ॥

इट् सनो वा ॥ ११० ॥

वृदृभ्यः परस्य सन इडागमो वा भवति । वुवूर्षते, विवरिषते । विवरीषते । आवुवूर्षति, आविवरिषति, आविवरीषति । तितीर्षति, तितरिषति तितरीषति । सनि 'ग्रहिगुहिभ्यां च —' (६-४-१५२) इत्यनेन, (किति) (सुस्नु? श्रुयुगृणु)भ्यः —' (६-४-१५१) (इति च) प्रतिषेधे प्राप्ते वृदृभ्योऽनेन पक्षे इडागमो विधीयते ॥

लिङ्सिचोरात्मनेपदेषु ॥ १११ ॥

वृदृभ्यः परस्य लिङ्सिचोरात्मनेपदविषययोरिडागमो वा भवति । वृषीष्ट, वरिषीष्ट । प्रावृषीष्ट, प्रावरिषीष्ट । आस्तरिषीष्ट, आस्तीर्षीष्ट । अवृत

१ 'प्रा' [illegible] पाठः.

थवरिष्ट, अवरीष्ट। प्रावृत, प्रावरिष्ट, प्रावरीष्ट। आस्तीर्ष्ट, आस्तरिष्ट, आस्तरीष्ट। आत्मनेपदेष्विति किम्। प्रावरीत्। प्रावारिषम्। नियमो भवति ॥

ऋतः संयोगादेरप्लुटः ॥ ११२ ॥

ऋकारान्तात् ... ... ...

.... .... ... .... ....

स्वरतिसूतिसूयतिधूञूदिद्भ्यः ॥ ११३ ॥

.. ... .. ... ... ... ... म्यद्योतस्य वलादेरार्धधातुकस्येडागमो वा भवति। स्वरिता, स्वर्ता। प्रसविता, प्रसोता। सविता, सोता। धविता (धोता)। गाहिता, गाढा। सूतिसूयतीति विकरणनिर्देशात् तौदादिकस्य (नित्य)मेवेड् भवति। सविता। धूञः सानुबन्धकस्य निर्देशात् 'धू विधूनने' इत्यस्य नित्यमिड् भवति। धविता। स्वरतेरेतस्मात् विकल्पाद् 'ऋ (द्धनोः स्य) हनिभ्यः स्य)स्व (६-४-१८४), इति परत्वान्नित्यमिड् भवति। (ऋद्धनोः स्ये) किंतस्तु प्रत्ययस्य 'श्र्युकः किति' (६-४-१५१) इति परत्वात् प्रतिषेध.। स्वृत्वा। सूत्वा। धूत्वा ॥

रधनशतृपदृपद्रुहमुहस्नुहस्निहिभ्यः ॥ ११४ ॥

रधादिभ्यः परस्य वलादेरार्धधातुकस्य इडागमो वा भवति। रद्धा, रधिता। नंष्टा, नशिता। तर्प्ता, त्रप्ता तर्पिता। दर्प्ता, (द्रप्ता) दर्पिता। रधादिसाहचर्यात् तृपिदृप्योर्दैवादिकयोर्ग्रहणम्। तौदादिक(यो) स्तु नित्यमेवेड् भवति। निष्ठायामपि 'गत्तोऽस्नेर्वा' (६-४-१५५) इति प्रतिषेधाभावात् तृपितं दर्पितमिति। द्रोग्धा, द्रोढा, द्रोहिता। मोग्धा, मोढा, मोहिता। स्नोग्धा, स्नोढा, स्नोहिता। स्नेग्धा, स्नेढा, स्नेहिता। लिटः परत्वे (ना ? सा)दिनियमादिट्। ररन्धिव। ररन्धिम ॥

निरः कुषः ॥ ११५ ॥

निरुपसर्गात् परस्य कुष उत्तरस्य वलादेरार्धधातुकस्येडागमो (वा) भवति। निष्कोष्टा, निष्कोषिता। निर इति किम्। कोषिता, प्र(रा? को)षिता। निष्कुष इति वक्तव्ये निर इति वचनं रेफान्तमुपसर्गान्तरमस्तीति

ज्ञापनार्थम् । तेन निलयनमिति 'उपसर्गस्यायतौ' (७-२-५५) इति लत्वं भवति । निसो हि क्त्वस्यासिद्धत्वात् निरयणमिति लत्वं न भवति ॥

निष्ठायाः[1] ॥ ११६ ॥

निरः उत्तरस्य कुषः परस्या निष्ठाया इडागमो भवति । निष्कुषितः । निष्कुषितवान् । योगविभागो नित्यार्थः । तेन 'यतोऽप्रते(र्वा)' (६-४-१६५) इति प्रतिषेधोऽपि न भवति ॥

पूङ्क्लिशिभ्यां क्त्वश्च ॥ ११७ ॥

पूङः क्लिशेश्च परस्य क्त्वाप्रत्ययस्य निष्ठायाश्च वा इडागमो भवति । पूत्वा, पवित्वा । क्लिष्ट्वा, क्लिशित्वा । पूतः । पूतवान् । पवितः । पवितवान् । क्लिष्टः । क्लिष्टवान् । क्लिशितः । क्लिशितवान् । पूङ इति ङकारः पूञ्निवृत्त्यर्थः । पूत्वा । पूतः । पूतवान् । 'क्लिशू विबाधने' इत्यस्य ऊदित्त्वात् क्त्वाप्रत्य (य ? ये)विकल्पः सिद्धः । निष्ठायां तु 'यतोऽप्रतेर्वा' (६-४-१५५) इति निषेधे प्राप्ते, 'क्लिश उपतापे' इत्यस्य (क्त ? तु) क्त्वायां निष्ठायां च नित्यमि(ति ? टि) प्राप्ते विकल्पार्थं वचनम् ॥

क्षुधिवसिभ्यामिट् ॥ ११८ ॥

क्षुधिवसिभ्यामुत्तरयोः क्त्वानिष्ठयोरिडागमो भवति । क्षुधित्वा । क्षुधितः । क्षुधितवान् । उषित्वा । उषितः । उषितवान् । क्त्वेरिडस्त्येव । इड्ग्रहणं विकल्पनिवृत्त्यर्थम् ॥

अञ्चतेः[2] पूजायाम् ॥ ११९ ॥

पूजायां वर्तमानात् अञ्चेः परयोः क्त्वानिष्ठयोरिडागमो भवति । अञ्चित्वा जानु जुहोति । अञ्चिता अस्य गुरवः । गुरुः (स ? अ)ञ्चितवान् । पूजायामिति किम् । अक्त्वा, अञ्चित्वा । उदक्तमुदकं कूपात् ॥

लुभो विमोहने ॥ १२० ॥

लुभ इत्येतस्माद्विमोहने (मृ ? ए)त्वे वर्तमानादुत्तरयोः क्त्वानिष्ठयोरिडागमो भवति । लुभित्वा, लोभित्वा । विलुभितः सीमन्तः । विलुभितवान् । विमोहन इति किम् । लुब्धो यतो नाममः । (लुभित्वा । लोभित्वा ?) । लुब्धः । लुब्धवान् ॥

१. 'प्रसु नि', २. 'श्चि; पूं क, च्छ.

जृपः क्त्वः ॥ १२१ ॥

जॄपः परस्य क्त्वाप्रत्ययस्येडागमो भवति । (जुपि १.जरि) त्वा । 'श्र्युगूर्णभ्यः कितः' (६-४-१५१) इति प्रतिषेधे प्राप्ते वचनम् । सानुबन्धनिर्देशात् 'जॄ वयोहानावि'त्यस्य जीर्त्वैस्येव भवति ॥

व्रश्चेरसम्प्रसारणं च ॥ १२२ ॥

व्रश्चेः परस्य क्त्वाप्रत्ययस्येडागमस्तत्सन्नियोगेन सम्प्रसारणाभावश्च भवति । व्रश्चित्वा गतः । ऊदित्वाद्विकल्पे प्राप्ते वचनम् ॥

उदितो वा ॥ १२३ ॥

उदितो धातोः परस्य क्त्वाप्रत्ययस्येडागमो भवति वा । शान्त्वा, शमित्वा । तान्त्वा, तमित्वा । द्यूत्वा, देवित्वा । (स्यक १ स्यू) त्वा, सेवित्वा । उदितां सेट्त्वात् प्राप्तविभाषेयम् ॥

तादेः सहलुभेषुरुषरिषिभ्यः ॥ १२४ ॥

सहादिभ्यो धातुभ्यः परस्य तकारादेरार्धधातुकस्येडागमो (वा) भवति । सोढा, सहिता । लोब्धा, लोभिता । एष्टा, एषिता । इष्वित्युदनुबन्धनिर्देशा'दिष गतौ' 'इष आभीक्ष्ण्ये' इत्यनयोर्दैवादिकक्रैयादिकयोर्नित्यमेवेड् भवति । रोष्टा, रोषिता । रेष्टा, रेषिता । तादेरिति किम् । सहिष्यते । लोभिष्यति ॥

इवन्तर्धभ्रस्जदम्भुस्वृश्रियूर्णुभरज्ञपिसनितनिपतिदरिद्राभ्यः सनः ॥ १२५ ॥

इवन्तेभ्यो धातुभ्यः ऋधादिभ्यश्चोत्तरस्य सन इडागमो वा भवति । दुद्यूषति, दिदेविषति । सुस्यूषति, सिसेविषति । ऋधु—ईर्त्सति अर्दिधिषति भ्रस्ज—बिभ्रक्षति, बिभर्क्षति, बिभ्रज्जिषति, बिभर्जिषति । दम्भु—धिप्सति धीप्सति, दिदम्भिषति । श्रि—शिश्रीषति, शिश्रयिषति । स्वृ—सुस्वूर्षति,

१. 'जु' क. पाठः.

सिस्वरिषति। यु—युयूषति, यियविषति। ऊर्णु—प्रोर्णुनूषति, प्रोर्णुनुविषति, प्रोर्णुनविषति। भृञ्—बुभूषति, बिभरिषति। भरेति शपा निर्देशात् बिभ(र्ति ? र्तेः) न भवति। ज्ञपि—जिज्ञपयिषति, ज्ञीप्सति। ह्रस्वनिर्देशात् तु ज्ञापेर्जिज्ञापयिषतीत्येव भवति। सनि—सिषासति, सिसनिषति। (तनि-) तितंसति, तितांसति, (तितासति ?) तितनिषति। पति—पित्सति, पिप-तिषति। (दरिद्रा-) दिदरिद्रासति, दिदरिद्रिषति। सन इति किम्। देविता। अर्दिता। भ्रष्टा। भृस्वाश्रियूर्णूनां 'ग्रहिगुहिभ्यां च सनः' (६-४-१५२) (बुभूषति।) इति भरद्वाजायोस्तु (?)सामान्येन प्रतिषे (धो ? धे)ऽन्येषां च नित्यमिटि प्राप्ते विकल्पो विधीयते ॥

## सादेरसिचः कृतचृतनृतच्छृदतृदः ॥ १२६ ॥

कृतादिभ्यः परस्य सकारादेः सिज्वर्जितस्यार्धधातुकस्येडागमो वा भवति। कर्त्स्यति, कर्तिष्यति। (चर्त्स्यति, चर्तिष्यति) । निनृत्सति, निन-र्तिषति। (छर्त्स्यति), छर्दिष्यति। तर्त्स्यति, तर्दिष्यति। तितृत्सति, तितर्दि-षति। अतर्त्स्यत्, अतर्दिष्यत्। सादेरिति किम्। कर्तिता। असिच इति किम्। अकर्तीत् ॥

## अनिङ्गमेरिट् ॥ १२७ ॥

ए(डा ? आ)देशवर्जिताद् गमेः परस्य सकारादेरार्धधातुकस्येडागमो भवति। गमिष्यति। अगमिष्यत्। जिगमिषति भवान्। अधिजिगमिष-ति मातुः। अनि(ङी ? ङि)ति किम्। अधिजिगांसिता। इदमपूर्वं विक-ल्पनिवृत्त्यर्थम्।

## नात्मनेपदेषु ॥ १२८ ॥

गमेः परस्य [illegible] सकारादेरार्धधातुकस्यात्मनेपदेषु परत इडागमो न भवति। (सम ? संग)[illegible] [illegible]। संगं[illegible] [illegible]। [illegible]। संजिगंसते। [illegible] [illegible]। [illegible] ॥

## वृतिवृधि(श ? शृ)[illegible] ॥ १२९ ॥

[illegible]

वृधु—वर्त्स्यति । अवर्त्स्यत् । विवृत्सति । शृधु—शर्त्स्यति । अशर्त्स्यत् । शिशृत्सति । स्यन्द्—स्यन्त्स्यति । अस्यन्त्स्यत् । सिस्यन्त्सति । अन्तरङ्गो- ऽपि स्यन्देरूदिल्लक्षणो विकल्पो वचनादनेन प्रतिषेधेन बाध्यते । अन्यत्रेति किम् । वर्तिष्यते । विवर्तिषते । वर्धिष्यते । विवर्धिषते । शर्धिष्यते । शिशर्धिषते । स्यन्दिष्यते । स्यन्त्स्यते । सिस्यन्दिषते । सिस्यन्त्सते ॥

तासश्च कॢपः ॥ १३० ॥

कॢपः परस्य तासः सकारादेश्चार्धधातुकस्यात्मनेपदादन्यत्रेडागमो (न) भवति । कल्प्ता । कल्प्तासि । (कल्प्ता?) कल्प्तास्मि । अकल्प्स्यत् । चिक्लृप्सति । ऊदिल्लक्षणोत्तरो विकल्पो वचनात् प्रतिषेधेन बाध्यते । अन्यत्रेत्येव । कल्पिता, कल्प्ता । कल्पिष्यते, कल्प्स्यते ॥

स्नोरात्मनेपदे ॥ १३१ ॥

स्नोः परस्यार्धधातुकस्यात्मनेपदे सतीडागमो न भवति । प्रस्नोता । प्रस्नोतासे । प्रस्नोष्यते । प्रस्नोष्यमाणः । प्र(सु)स्नूषते । आत्मनेपद इति किम् । प्रस्नविता । प्रस्नवितासि । प्रस्नवितव्यम् । प्र(सु)स्नूषतीत्यत्र सनो 'ग्रहिगुहिभ्यां च—' (६-९-१५२) इत्युग्लक्षण. प्रतिषेधः ॥

क्रमः ॥ १३२ ॥

क्रमः परस्य वलादेरार्धधातुकस्यात्मनेपदे सति इडागमो न भवति । प्रक्रन्तासे । उपक्रन्तासे । प्रक्रं(सि? सी)ष्ट । प्रक्रंस्यते । (प्रक्रम्यते?) । विचिक्रंसते । आत्मनेपद इति किम् । क्रमिता । क्रमिष्यति ॥

तद्विषयात्तुः ॥ १३३ ॥

आत्मनेपदविषयात् क्रमेः परस्य तृचस्तुन्नार्धधातुकस्येडागमो न भवति । आत्मनेपदविषयश्च क्रमिः वृत्त्यतीहा(र? रा)प्रतिनिन्धादिषु प्रोपाभ्यां पूर्वाङ्गमादिषु भवति । क्रन्ता । प(र? रा)क्रन्ता । आक्रन्ता । विक्रन्ता । तद्विषयादिति किम् । क्रमिता । निष्क्रमिता । तृचिति किम् । प्रक्रमितुम् । प्रक्रमितव्यम् ॥

(ती ?)न्वैशुणादेः कृतः ॥ १३४ ॥

कृतक्तप्रत्ययस्य वश्वादेरुणादेश्च वलादेरार्धधातुकस्येडागमो न भवति । पोत्रं शस्त्रम् । (गस्तु ईश्वरः । दीप्ताग्रस्तु ?) याञ्चा । यत्नः । उणादेः खल्वपि—शङ्कः । शङ्कुः । सुद्रः । दीर्घं इत्यादि । न्वशुणादेरिति किम् । लषिता । लवितुम् । कृत इति किम् । अग्निवः । जग्मिम । कृद्ग्रहणं यत्रादे(रे)व विशेषणं, न तु ओणादेः । अव्यभिचारात् ॥

स्केरग्रहरिन्विहक्षुचपठपदस्म(ण)रणदीधी(मो ? मथा)-दिभ्यः ॥ १३५ ॥

स्केः क्तिनः क्तिचो वा अग्रहादिभ्यो धातुभ्यः परस्येडागमो न भवति । दीप्तिः । क्षप्तिः । शान्तिः । वातिः । क्तिचः खल्वपि—कण्डूतिः । अग्रहादिभ्य इति किम् । निगृहीतिः । उपस्निहितिः । निकुचितिः । निपठितिः । उदितिः । (मण ? मणि)तिः । (णातिः ? रणितिः) । दीधितिः । मथितिः । णादिग्रहणात् लिखितिः । उज्झितिः । कम्पितिः । (अ ? आ)-न्दोलितिः इत्यादयो भवन्ति ॥

अच एकाचोऽनूदृच्छिवश्रिडीङ्शीङ्युस्तुनु-क्षुक्ष्णुवृङ्वृञः ॥ १३६ ॥

एकाचोऽजन्ताद् धातो(र इ ? रू)दन्तऋदन्त(स्याति ? श्व्यादि)-वर्जिताद्विहितस्य वलादेरार्धधातुकस्येडागमो न भवति । दाता । चेता । नेता । श्रोता । कर्त्ता । अनूदादेरिति किम् । (स्वरिता ?) । तरिता, तरीता । श्व(पि ? यि)ता । श्रयिता । डयिता । शयिता । यविता । रविता । प्रस्नविता । नविता । क्षविता । सं(क्षपि ? क्ष्णवि)ता । वरिता), वरीता । प्रावरिता प्रावरीता । अच इति किम् । पठिता । एकाच् इति किम् । अवधिष्याम् । दरिद्रिता । आदीधिता । विहितविशेषणं किम् । चिकीर्षति । जिहीर्षति ॥

---

1. 'तृणक्षु' क. पाठः. 2. 'शुमण' ख. ग. पाठः. 3. 'मिथादि' क. ग. पाठः.

शके लृदितः ॥ १३७ ॥

शकेः लृकारानुबन्धात् परस्यार्धधातुकस्येडागमो न भवति। शक्ता। शक्तुम्। लृदित इति किम्। 'शक मृष क्षमायाम्' इत्यतः शकिता॥

विदेरलुकः ॥ १३८ ॥

लुग्विकरणादन्यो यो विदिस्तस्मात् परस्यार्धधातुकस्येडागमो न भवति। विद्यतेर्विन्तेर्वि(न्दे ? न्दते)श्च वेत्ता वाक्यम्। अलुक इति किम्। वेत्तेर्वेदिता व्याकरणम्॥

श्लिषिपुषिसिधिबुधि(स्व ? स्वि)दिमनः श्यना ॥ १३९ ॥

श्यन्विकरणोपलक्षितेभ्यः (श्लिषादिभ्य.) परस्यार्धधातुकस्येडागमो न भवति। श्लेष्टा। पोष्टा। सेद्धा। बोद्धा। स्वेत्ता। मन्ता। श्यनेति किम्। 'श्लिष दाहे'— श्लेषिता। पोषतेः पुष्णातेश्च पोषिता। सेधतेः सेधिता। बोधतेर्बोधिता।। स्वेदतेः स्वेदिता। मनुतेर्मनिता॥

हन्वस्वसग्रच्छः ॥ १४० ॥

हनादिभ्यो विहितस्यार्धधातुकस्येडागमो न भवति। हन्ता। (स्वन्ता ? वस्ता)। जिघत्सति। वस्ता। वस इति शपा निर्देशात् वस्तेर्न भवति। वसिता वस्त्रम्। प्रष्टा। विहितविशेषणात्तदादेशादपि प्रतिषेधो न भवति। अवधिष्टाम्॥

परिमुसिविवाच्चः ॥ १४१ ॥

प रि मु सि वि व इत्येतेभ्यः परो यश्चकारस्तदन्ताद्विहितस्यार्धधातुकस्येडागमो न भवति। पच-पक्ता। रिचि-रेक्ता। मुच-मोक्ता। सिच-सेक्ता। विच-वेक्ता। 'वच परिभाषणे', ब्रूञादेशो वा वक्ता। परिमुसिविवा(मि ? दि)ति किम्। शोचिता। च इति किम्। पठिता॥

भ्रस्जमस्जमुजयजसंजरञ्जभंजिसृजत्यजयुजिभाञ्जः ॥ १४२ ॥

भ्रस्जादिभ्यः परो यो जकारस्तदन्तात् धातोः परस्यार्धधातुकस्येडागमो न भवति। भ्रस्ज-भ्रष्टा, भर्ष्टा। मस्ज-मङ्क्ता। भुज-भुजते

(से ? शु)नक्तेश्च भोक्ता । मज-रोक्ता । स्वञ्ज-परिष्वङ्क्ता । (सञ्ज-सङ्क्ता । रञ्ज-रङ्क्ता ।) भञ्ज-भङ्क्ता । विजि-विवेक्ता । 'ओविजी भयचलनयोः' इत्यतस्त्वा(त् दिति ? दीदि)त्वात् प्रतिषेधो न भवति । उद्विजिता । उद्विजितुम् । सृज-स्रष्टा । त्यज-त्यक्ता । यज-यष्टा । युज-युज्यतेर्युनक्तेश्च योक्ता । निज-निर्णेक्ता । भज-भक्ता ॥

अच्छिसखिद्तुदक्षुद्भिदक्षुद्शाद् दः ॥ १४३ ॥

(अ) इत्यादिभ्यः परो यो दकारस्तदन्ताद् धातोर्विहितस्यार्धधातुकस्येडागमो न भवति । अद्-अत्ता । छिद्- छेत्ता । सद्-सत्ता । खिद्यतेः खिन्दतेः खिन्तेश्च-खेत्ता । (द ?)हद्-हत्ता । तुद्-तोत्ता । (स्क ? स्कं)द्-स्क(त्ता ? न्ता) । पद्-पत्ता । नुद्-नोत्ता । भिद्-भेत्ता । क्षुद्-क्षोत्ता शद्-शत्ता । एभ्य इति किम् । खादिता ॥

साराधक्षुधयुधक्रुधशुधव्याध् धः ॥ १४४ ॥

साधिभ्यः परो यो धकारस्तदन्ताद् धातोः परस्यार्धधातुकस्येडागमो न भवति । साध-साद्धा । राध-राद्धा । बन्ध-बद्धा । रुध-रोद्धा । क्षुध-क्षोद्धा । युध-योद्धा । क्रुध-क्रोद्धा । शुध-शोद्धा । व्यध-व्यद्धा ॥ एभ्य इति किम् । बाधिता ॥

आपस्वपलिपलुपक्षिपतिपतृपतपवपशपात् पः ॥ १४५ ॥

आप्रभृतिभ्यः परो यः पकारस्तदन्ताद् धातोर्विहितस्यार्धधातुकस्येडागमो न भवति । आप-आप्ता । स्वप-स्वप्ता । लिप-लेप्ता । लुप-लोप्ता । लुप-लोप्ता । क्षिप्यतेः क्षिपतेश्च- क्षेप्ता । तिप-तेप्ता । सृप-सर्प्ता, स्रप्ता । तपतेस्तप्यतेश्च-तप्ता । वप-वप्ता । शप-शपतेः शप्यतेश्च-शप्ता । एभ्य इति किम् । वेपिता । (ए ? प) इति किम् । आशिता ॥

यरलात् भः ॥ १४६ ॥

यरलेभ्यः परो यो भकारस्तदन्ताद् धातोर्विहितस्यार्धधातुकस्येडागमो न भवति । यभ-यब्धा । (रभ-रब्धा) । लभ-लब्धा । एभ्य इति किम् । शोभिता । भ इति किम् । अ(? य)तितः ॥

यरनगान्मः ॥ १४७ ॥

यरनगेभ्यः परो यो मकारस्तदन्ताद् धातोर्विहितस्यार्धधातुकस्येडागमो न भवति । यम–यन्ता । रम–(र)न्ता । नम–नन्ता । गम–गन्ता । एभ्य इति किम् । कमितः । यरेत्यादिकेवलग्रहणात् (य ? श्र)मिता स्यमितेत्यादौ प्रतिषेधो न भवति ॥

लिविमृदिस्पृदन्दरुकुरेः शः ॥ १४८ ॥

लिप्रभृतिभ्यः परो यः शकारस्तदन्ताद् धातोर्विहितस्यार्धधातुकस्येडागमो न भवति । लिश–लिश्यतेर्लिशतेश्च लेष्टा । विश–वेष्टा । मृश–म्रष्टा, मर्ष्टा । दिश–देष्टा । स्पृश–स्प्रष्टा (स्पर्ष्टा ।) दंश–दंष्टा । दृश–द्रष्टा । रुश–रोष्टा । क्रुश–आक्रोष्टा । रिश–रेष्टा । एभ्य इति किम् । भ्रंशिता ॥

वितुदुत्विद्विशिशुक्रुपेः षः ॥ १४९ ॥

विप्रभृतिभ्यः परो यः षकारस्तदन्ताद् धातोर्विहितस्यार्धधातुकस्येडागमो न भवति । विष्–वेष्टा । तुष्–तोष्टा । दुष्–दोष्टा । त्विष्–त्वेष्टा । द्विष्–द्वेष्टा । शिष्–शेष्टा । शुष्–शोष्टा । कृष( तेः) कर्षतेश्च–क्रष्टा, कर्ष्टा । पिष्–पेष्टा । [इत्यादि ? ] ॥

दिनमिवद्रुदुलिरिलोर्हः ॥ १५० ॥

दिप्रभृतिभ्यः परो यो हकारस्तदन्ताद् धातोर्विहितस्यार्धधातुकस्येडागमो न भवति । दिह्–देग्धा । नह् नद्धा । (मिह्–मेढा । वह्–वोढा । दह्–दग्धा ।) रुह्–आरोढा । दुह्– दोग्धा । लिह्–लेढा । रिह्–रेढा । लुह्–लोढा । रिहलुहौ मौत्रौ हिंसार्थौ केचिदेवेच्छन्ति । एभ्य इति किम् । महिता । ह इति किम् । देविता । यकादि(स्वप्न ? प्ने) का(रा ?)नित्यत्वदर्थेयु(लु)गन्तादिदप्रतिषेधो न भवति । शाकिता । ये(वि ? दे)दिता । शेश्लेषिता । जङ्गनिता । पापचि( ते)त्यादि ॥

श्रयुगूर्णुभ्यः क्तिः ॥ १५१ ॥

श्रयतेरुगन्तेभ्यश्च ऊर्णोतेश्च विहितस्य कित आर्धधातुकस्येडागमो न भवति । श्रित्वा । श्रितः । सुत्वा । सुतः । लूत्वा । लूनः ।

दृत्वा । दृतः । तीर्त्वा । तीर्णः । (पूर्त्वा) पूर्णः । पिद्विविशेषणविज्ञानात् कृतयोरपि इरोः प्रतिषेधो भवति । ऊर्णुत्वा । ऊर्णुतः । एकाच इत्येव । जागरित्वा । जागरितः । क्त्व इति किम् । श्रयिता । यविता । प्रोर्णविता ॥

## ग्रहिगुहिभ्यां च सनः ॥ १५२ ॥

ग्रहिगुहिभ्यां श्र्यादिभ्यश्चोत्तरस्य सन इडागमो न भवति । जिघृक्षति । जुघुक्षति । रुरूषति । लुलूषति । पुपूषति । श्रिस्वृयूर्णुभ्यो (प्न ? वृ)दृभ्यश्च (*पूर्वकं ?) एवेड्विकल्पो भवति । शिश्रीषति, शिश्रयिषति । सुस्वूर्षति, सिस्वरिषति । युयूषति, यियविषति । प्रोर्णुनूषति, (प्रोर्णुनुविषति), प्रोर्णुनविषति । वुवूर्षति, विवरिषति । तितीर्षति, तिवरिषति ।

## स्वार्थे ॥ १५३ ॥

स्वार्थे विहितस्य सन इडागमो न भवति । तितिक्षते । चिकित्सति । जुगुप्सते । स्वार्थ इति किम् । शिशयिषते । पिपठिषति ॥

## श्विडीङीदिद्भ्यो निष्ठायाः ॥ १५४ ॥

श्विडीङ्भ्यामीदिद्भ्यश्च पराया निष्ठाया इडागमो न भवति । शूनः । शूनवान् । डीनः । डीनवान् । श्वयतिना नत्वनिमित्तेन साहचर्यात् भौवादिकस्य ग्रहणं न भवति । डयितः । डयितवान् । ईदिद्भ्यः— ओलस्जी— लग्नः । लग्नवान् । ओविजी–विग्नः । विग्नवान् । निष्ठायामिति किम् । श्वयिता । डयिता । वर्जिता । उद्विजिता ॥

## यतोऽपतेर्वा ॥ १५५ ॥

यस्मात् परस्यार्धधातुकस्येड् वा विहितस्तस्मात् पतिवर्जितादेकाचः परस्या निष्ठाया इडागमो न भवति । स्यूतः । स्यूतवान् । शान्तः । शान्तवान् । सोढः । सोढवान । हृष्टः । हृष्टवान् । अपतेरिति किम् । पतितः । पतितवान् । एकाच इत्येव । दरिद्रितः । दरिद्रितवान् । कथं प्रोर्णुतः । प्रोर्णुतवान् । 'श्रयुगूर्णुभ्यः कितः' (६- ४- १५१) इत्यनेन भविष्यति ॥

---

* 'पूर्वेण' इति स्यात् ।

आदितः ॥ १५६ ॥

आकारानुबन्धाद् धातोः परस्या निष्ठायाः इडागमो न भवति। ञिमिदा–मिन्नः। मिन्नवान्। ञिक्ष्विदा— क्ष्विण्णः। क्ष्विण्णवान्।

भावादिकर्मणोर्वा ॥ १५७ ॥

भावार्थे आदिकर्मणि वा या निष्ठा तस्याः आकारानुबन्धाद्धातोरिडागमो वा न भवति। मिन्नमनेन, मेदितमनेन। प्रमिन्नः, प्रमेदितः। प्रमिन्नवान्, प्रमेदितवान्। आदित इत्येव। विदितमनेन। प्रविदितः। प्रविदितवान् ॥

शकेः कर्मणि ॥ १५८ ॥

शकेर्धातोः परा कर्मणि या निष्ठा तस्या इडागमो वा न भवति। शक्तो घटः कर्तुं देवदत्तेन, शकितो घटः कर्तुं देवदत्तेन। कर्मणीति किम्। शक्तो घटं कर्तुं देवदत्तः ॥

जपिवम्याश्वमिविश्वसिभ्यः ॥ १५९ ॥

जप्यादिभ्यः परा या निष्ठा तस्या इडागमो वा न भवति। जप्तः जप्तवान्, जपितः जपितवान्। वान्तः वान्तवान्, वमितः वमितवान्। आश्वस्त आश्वस्तवान्, आश्वसित आश्वसितवान्। विश्वस्तः विश्वस्तवान्, विश्वसितः विश्वसितवान्। श्वसेः सोपसर्गस्योपादानं किम्। श्वसितः। निःश्वसितः ॥

क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमस्सक्ताविस्पष्टस्वरानायासभृशेषु ॥ १६० ॥

क्षुब्धादीनि निष्ठान्तानि शब्दरूपाणि यथासंख्यं मन्थादिष्वर्थेषु निपात्यन्ते। क्षुब्धः मन्थश्चेत्। क्षुभितमन्यत्। 'क्षुब्धा नदी गिरितटी'त्यादयस्तूपचारात् भविष्यन्ति। स्वान्तमिति मनश्चेत्। स्वनितमन्यत्। (ध्वान्तमिति तमश्चेत्। ध्वनितमन्यत्) लग्नमिति सक्तश्चेत्। लगितमन्यत्। म्लिष्टमित्यविस्पष्टं चेत्। म्लेच्छितमन्यत्। विरिब्ध इति स्वरश्चेत्। विरेभितमन्यत्। फाण्टमित्यनायाससाध्यश्चेत्। फा(ण्टि?णि)तमन्यत्। बाढमिति भृशश्चेत्। (बाहितमन्यत्।) क्रियाविशेषणं चैतत् ॥

धृषिशसिभ्यां प्रागल्भ्ये ॥ १६१ ॥

धृषिशसिभ्यां परा या निष्ठा तस्याः प्रागल्भ्य एव गम्यमाने इडागमो न भवति। प्रागल्भ्यं वैयात्यम् । धृष्टः । विश(स्तः)। प्रागल्भ्य इति किम् । धर्षितः । विशसितः । धृषेः 'आदितः' (६-४-१५६) इति, शसेरुदित्त्वाद् 'यतोऽपतेर्वा' (६-४-१५५) इति प्रतिषेधविधेर्नियमार्थं वचनम् । भावादिकर्मणोस्तु प्रागल्भ्ये धृषिर्नास्ति ॥

दृढः स्थूलबलिनोः ॥ १६२ ॥

दृढ इति दृहेर्दृंहेर्वा परस्य क्तस्य स्थूले बलवति चार्थे इडभावो ढत्वं प्रकृतेर्हलोपो नलोपश्च निपात्यते । दृढः स्थूलः । दृढो बलवान् । स्थूलबलिनोरिति किम् । दृहितम् । (दृंहि)तम् ॥

प्रभौ परिवृढः ॥ १६३ ॥

परिपूर्वस्य (वृहेः) वृंहेर्वा परस्य क्तस्य प्रभावर्थे पूर्ववदिडभावो निपात्यते। परिवृढः प्रभुः । प्रभाविति किम् । (परिवृहितं) परिवृंहितम् । दृढपरिवृढयोर्हलोपनिपातनं [ढलोपस्य] पूर्वत्रासिद्धत्वात् परिद्रढय्य गतः परिव्रढय्य गत इति 'ल्यपि लघुपूर्वात्' (६-३-६९) इत्ययादेशो न स्याद् [इति] ।

कृच्छ्रगहनयोः कषः ॥ १६४ ॥

कषेर्धातोः परस्या निष्ठायाः कृच्छ्रगहनयोरर्थयोरिडागमो न भवति । कृच्छ्रं दुःखं तत्कारणं च । गहनं दुरवगाहम् । कष्टं वर्तते । कष्टोऽग्निः । कष्टाः पर्वताः । कष्टानि वनानि । कृच्छ्रगहनयोरिति किम् । कषितम् ॥

घुषेरविशब्दने ॥ १६५ ॥

विशब्दनं नानाशब्दनं प्रतिज्ञानं वा । ततोऽन्यत्रार्थे घुषेः परस्या निष्ठाया इडागमो न भवति । घुष्टा रज्जुः । घुष्टौ पादौ । अविशब्दन इति किम् । अ(वि)घुषितं वाक्यमाह। अत एव विशब्द(न)प्रतिषेधाज्ज्ञायते

न, क्षुधेर्विशब्दनार्थस्य नित्यत्वचुरादिणिजिति । तेनायं प्रयोगः—"क्षुक्षुधुः क्षुध्यमाणवाः" इत्युपपन्नो भवति॥

अर्देः सन्निविभ्यः ॥ १६६ ॥

समादिभ्य परो योऽर्दिस्तत उत्तरस्या निष्ठाया इडागमो न भवति । समर्णः । न्यर्णः । व्यर्णः । सन्निविभ्य इति किम् । प्रार्दितः ।

अभेरविदूरे ॥ १६७ ॥

अभेः परो योऽर्दिस्तस्मादुत्तरस्या निष्ठाया अविदूरेऽर्थे इडागमो न भवति । अभ्यर्णम् । अभ्यर्णा शरत् । अविदूर इति किम् । अभ्यर्दितो वृषलः । शीतेन पीडित इत्यर्थः ।

णेर्वृत्तं ग्रन्थे ॥ १६८ ॥

वृतेर्ण्यन्तात् क्तप्रत्यये ग्रन्थविषये वृत्तमिति निपात्यते । णिलोपो गुणेट्प्रतिषेधौ च निपातनात् । वृत्तो गुणो देवदत्तेन । वृत्तं पारायणं देवदत्तेन । वृतेर्ण्यर्थे वर्त्तमानस्याण्यन्तस्य कर्मण्यपि वृत्तमिति सिद्धे (यथा णिनैव स्मृतो? यदा णिचैव ण्यर्थो)ऽभिधीयते तदा वर्तितमिति यथेह मा भूदिति निपातनम् । ग्रन्थ इति किम् । वर्तितमन्यत् ।

वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥ १६९ ॥

दान्तादयः शब्दा ण्यन्तेभ्यो दमादिभ्यः क्तप्रत्यये(वा)निपात्यन्ते । इडभावो (णि) लुक् च निपातनात् । दान्तः, दमितः । शान्तः, शमितः । पूर्णः, पूरितः । दस्तः, दासितः । स्पष्टः, स्पाशितः । छन्नः, छादितः । ज्ञप्तः, ज्ञपितः । संज्ञप्तः, संज्ञपितः॥

रुषामत्वरसंघुषास्वनिभ्यः ॥ १७० ॥

रुषादिभ्यः परा या निष्ठा तस्या इडागमो वा भवति । रुष्टः, रुषितः । अभ्यान्तः, अभ्यमितः । तूर्णः, त्वरितः । संघुष्टं वाक्यं, संघुषितं वाक्यम् । आस्वान्तो देवदत्तः, आस्वनितो देवदत्तः । संघुषास्वनिभ्या-

मिट्प्रतिषेधात् विकल्पो विप्रतिषेधेन भवति । तेनाविशब्दनादपि संघुष्टा रज्जुः, संघुषिता रज्जुः । आस्वान्तं मनः, आस्वनितं मनः ॥

हृषेर्लोमकेशकर्तृकात् ॥ १७१ ॥

हृषेर्लोमकर्तृके केशकर्तृके चार्थे वर्तमानात् परा या निष्ठा तस्या इडागमो वा भवति । हृष्टानि लोमानि, हृषितानि लोमानि । हृष्टं लोमभिः, हृषितं लोमभिः । हृष्टाः केशाः हृषिताः केशाः । हृष्टं केशैः, हृषितं केशैः । लोमकेशकर्तृकादिति किम् । हृष्टो देवदत्त इत्यलीकार्थस्य । हृषितो देवदत्त इति (तु)ष्टयर्थस्य ॥

विस्मितप्रतिहतयोश्च ॥ १७२ ॥

हृषेर्धातोः परा या निष्ठा तस्या विस्मिते प्रतिहते चार्थे इडागमो वा भवति । हृष्टो देवदत्तः, हृषितो देवदत्तः । विस्मित इत्यर्थः । हृष्टा दन्ताः, हृषिता दन्ताः । प्रतिहता इत्यर्थः ॥

अपाच्चायश्चिः ॥ १७३ ॥

अपपूर्वात् चायतेः परस्य क्तस्य वेट्प्रतिषेधः, तत्सन्नियोगेन चायतेश्चिरादेशो भवति । अपचितः, अपचायितः ॥

क्तिनि नित्यम् ॥ १७४ ॥

अपपूर्वाच्चायतेः क्तिनि नित्यं चिरादेशो भवति । इट्प्रतिषेधस्तु 'क्ते(र)ग्रह—'(६-४-१९५) इत्यादिनैव सिद्धः । अपचितिः पूजा ॥

सृभृवृस्तुद्रुस्रुश्रुभ्यो लिटः ॥ १७५ ॥

स्रादिभ्यः परस्य लिटो वलादेरिडागमो न भवति । ससृव । ससृम । बभृव । बभृम । ववृव । ववृम । ववृमहे । वृ इति वृङ्वृञोः सामान्यग्रहणम् । तुष्टुव । दुद्रुव । सुस्रुव । शुश्रुव । स्तुद्रुस्रुश्रुभ्य-स्थल:(^1शतोर्नेः?) इति नियमाद् य इट् प्राप्तः सोऽपि प्रतिषिध्यते । तुष्टोथ । दुद्रोथ । सुस्रोथ । शुश्रोथ । वृङ्वृञोर्वलादिलक्षणस्येटः प्रतिषेधः । अन्येभ्यस्त्वेकाचोऽनन्तात् इति प्रतिषेधे सिद्धे नियमार्थं वचनम् ।

१. 'ध छेट । अग' क. ग. पाठः.

(था ? स्था)दिभ्य एव परस्य लिट इण् न भवति । अन्येभ्यस्तु भवति ।-पपिव । पपिम । विव्यिव । विव्यिम । निन्यिवहे । निन्यिमहे । पेचिमहे । पेचिम ॥

## कृञोऽसुटः ॥ १७६ ॥

असुटः करोतेः परस्य लिट इडागमो (न) भवति । चकृव । चकृम । चकृषे । चकृवहे । चकृमहे । (क्रा ? स्था)दिनियमात् प्राप्तो निषिध्यते । असुट इति किम् । सञ्चस्करिव । सञ्चस्करिम ॥

## ऋतस्तासि नित्यानिटस्थलः ॥ १७७ ॥

ऋकारान्ताद् धातोस्तासि नित्यानिटो विहितस्य थल इडागमो न भवति । हर्ता— जहर्(पं ? थं ।) स्मर्ता — (सस्मर्तुं ! सस्मर्थ) । कृञोऽसुट इत्येव । संस्कर्ता— संस्करिथ । ऋत इति किम् । भेत्ता—बिभेदिथ । तासीति किम् । वृतः— ववरिथ । नित्यग्रहणं किम् । स्वर्ता, स्वरिता—(अ ? स)स्वरिथ । अनिट इति किम् । जागरिता—जजागरिथ । थल इति किम् । जह्रिम । (नवोचे ? अचोता इ)ति विकल्पे प्राप्ते प्रतिषेधः ॥

## अचो वा ॥ १७८ ॥

अजन्ताद् धातोस्तासि नित्यानिटः परस्य थल इडागमो वा न भवति । याता—ययाथ, ययिथ । चेता— चिचेथ, चिचयिथ । नेता— निनेथ, निनयिथ । तासीत्येव । युतः— युयविथ । नित्यमित्येव । सोता, सविता — सुषविथ । धोता, धविता — दुधविथ । अनिट इत्येव । श्रयिता— शिश्रयिथ । लविता— लुलविथ । थल इत्येव । ययिव । ययिम । (था ? स्था)दिनियमात् प्राप्ते विकल्पः ॥

## पाठेऽत्वतः ॥ १७९ ॥

गणपाठे सूत्रपाठे वा थकारवतो धातोस्तासि नित्यानिटः परस्य थल इडागमो वा न भवति । पक्ता—पपक्थ, पेचिथ । शक्ता—शशक्थ, शेकिथ । यष्टा—इयष्ठ, इयजिथ । गन्ता—जगन्थ, जगमिथ । पाठ इति

किम् । कष्टी—चकर्षिथ । अत्वत इति किम् । भेत्ता—बिभेदिथ । तपरः किम् । रराधिथ । तासीत्येव । जिघृक्षति—जग्रहिथ । नित्यमित्येव । रद्धा, रधिता—ररन्धिथ । अङ्क्ता, अञ्जिता—आ(न)ञ्जिथ । अनिट इत्येव । पफणिथ, फेणिथ । थल इत्येव । पेचिव । पेचिम ॥

सृजिदृशिभ्याम् ॥ १८० ॥

सृजिदृशिभ्यामुत्तरस्य थल इडागमो वा न भवति । सस्रष्ठ, ससर्जिथ । दद्रष्ठ, ददर्शिथ ॥

ऋवृञ्व्येञद्भ्य इट् ॥ १८१ ॥

अर्तेर्वृञो व्येञोऽदेश्च परस्य थल इडागमो भवति । आरिथ । ववरिथ । संविव्ययिथ । आदिथ । । अर्तेः 'ऋतस्तासि नित्यानिटस्थलः' (६-४-१७७) इति, वृञः 'सृसृट—' (६-४-१७५) इति प्रतिषेधे प्राप्ते, व्येञः 'अचो वा' (६-४-१७८) इति अदेः 'पाठेऽत्वतः' (६-४-१७९) इति च विकल्पे प्राप्ते नित्यमिड् विधीयते ।

क्वसोरेकाजाद्घसिभ्यः ॥ १८२ ॥

कृतद्विर्वचनेकाज्भ्यः आकारान्तेभ्यो घसेश्च परस्य क्वसोरिडागमो भवति । आदिवान् । आरिवान् । पेचिवान् । शेकिवान् । कृतद्विवचना एवे एकाचो भवन्ति । आतः—पपिवान् । ययिवान् । तस्थिवान् । घसः—जक्षिवान् । एकाजाद्घसिभ्य इति किद् । बिभिद्वान् । बभूवान् । (आद्घसि ? आद्घसि)ग्रहणमनेकाजर्थम् । (आ ? स्वा)दिनियमादि(टि) प्राप्ते नियमार्थं वचनम् ॥

गमहनदृशविशविद्लृभ्यो वा ॥ १८३ ॥

गमादिभ्यः परस्य क्वसोरिडागमो वा भवति । जग्मिवान्, जगन्वान् । जघ्निवान्, जघन्वान् । ददृशिवान्, ददृश्वान् । विविशिवान्, विविश्वान् । (विचिसिवान् विचिस्वान् ?) । विविदिवान्, विविद्वान्, लृकारोपादनं लाभार्थस्य विदेर्ग्रहणार्थम् ॥

ऋहनिभ्यः स्यस्य ॥ १८४ ॥

ऋकारान्तेभ्यो हन्तेश्च धातोः परस्य स्यप्रत्ययस्येडागमो भवति। करिष्यति। अकरिष्यत्। हनिष्यति। अहनिष्यत्। स्वरतेर्विकल्पं परत्वादयमिड् बाधते। स्वरिष्यति। अस्वरिष्यत्। बहुवचननिर्देशादर्त्तेरेव ग्रहणं न भवति॥

अञ्जेः सिचः॥ १८५॥

अञ्जेः परस्य सिच इडागमो भवति। (आञ्जीत्।) आञ्जिष्टाम्। आञ्जिषुः। सिच इति किम्। अङ्क्ता, अञ्जिता। ऊदित्वाद्विकल्पे प्राप्ते नित्यार्थं वचनम्॥

स्तुसुधूञ्भ्यः परस्मैपदेषु॥ १८६॥

स्तौत्यादिभ्यः परस्य सिचः परस्मैपदेषु परत इडागमो भवति। अस्तावीत्। अस्ताविष्टाम्। असावीत्। अधावीत्। परस्मैपदेष्विति किम्। अस्तोष्ट। असोष्ट। अधोष्ट, अधविष्ट। स्तौतिसुनोत्योः प्रतिषेधे, धूञस्तु विकल्पे प्राप्ते वचनम्॥

यमिरमिनमातां सुक् च॥ १८७॥

यमादीनामनन्तरस्य सिचः परस्मैपदपरस्येडागमस्तत्सन्नियोगेन चैषां सुगागमो भवति। अयंसीत्। अयंसिष्टाम्। व्यरंसीत्। व्यरंसिष्टाम्। अनंसीत्। यमादीनां तिप्सिपोरिटि सति वृद्धिप्रतिषेधो भवतीति विशेषः। आताम् — अयासीत्। अदरिद्रासीत्। आलोपपक्षे अदरिद्रीत्। परस्मैपदेष्वित्येव। अयंस्त। अरंस्त। अनंस्त दण्डः स्वयमेव। अमास्त धान्यं देवदत्तः॥

ऋस्मिपूङ्ञ्ज्वशूकॄगृदृधृप्रच्छिभ्यः सनः॥ १८८॥

अर्त्यादिभ्यः परस्य सन इडागमो भवति। (ऋ)अरिरिषति। सिस्मयिषते। (पूङ्)पिपविषते। (अञ्जू)—अञ्जिजिषति। (अशू)—अशिशिष(ति? ते)। कॄ—चिकरिषति। गृ—जिगरिषति। दृङ्—दिदरिषते। धृङ्—दिधरिषते। प्रच्छि—पिपृच्छिषति। किरादीनां परस्परसाहचर्यात् कृणातेश्चिकीर्षति, गृणातेर्जिगीर्षति, धरतेर्दिधीर्षति (दिधर्षति?) इति भवन्ति॥

रुदादिभ्यः स्वपिश्वस्यनिजक्षिभ्यस्तिङः ॥ १८९ ॥

रुदादिभ्यः परस्य वलादेस्तिङः प्रत्ययस्येडागमो भवति । रोदिति । स्वपिति । श्वसिति । प्राणिति । जक्षिति । तिङ इति किम् । स्वप्ता । वलादेरित्येव । रुदन्ति ॥

जनीशीडिभ्यः सेध्वयोः ॥ १९० ॥

जनादिभ्यः से ध्वे इत्येतयोरिडागमो भवति । व्यतिजज्ञिषे । व्यतिजज्ञिध्वे । जुहोत्यादित्वाद् द्विर्वचनम् । ईशिषे । ईशिध्वे । ईडिषे । ईडिध्वे । एकदेशविकृतस्यानन्यत्वात् एकारस्य वमः कृतयोरपि भवति । व्यति-जज्ञि(ध्यति ? ध्व) व्यतिजज्ञिध्वम् । ईशिष्व । ईशिध्वम् । (ईडिष्व) ई(डि)ध्वम् । (ध ? ल)ङि(त्वो ? ध्वं) भावाद्य भवति । व्यत्यजज्ध्वम् । ऐड्ढ्वम् । ईडेरपि ऐड्ढ्वम् ॥

आने मुगतः ॥ १९१ ॥

आने प्रत्यये परतः प्रकृतेरकारस्य मुगागमो भवति । पचमानः । कवचमुद्वहमानः । करिष्यमाणः । अत इति किम् । शयानः । भुञ्जानः । तपरः किम् । 'दाप् लवने' व्यति(धा ? दा)नः । प्रकृतेरित्येव । प्राणः । पूर्वान्तकरणम् 'अतो दीर्घो यञि' (पा० ७-३-१०१) इति दीर्घनि-वृत्त्यर्थम् ॥

ईदस्यासः ॥ १९२ ॥

अस्य आनस्य आसेर्वर्तिनः परस्यादेरीकारादेशो भवति । आसीनः । उदासीनः ॥

[illegible]

[illegible] (हृदयहारिण्या)

[illegible]

| सूत्रम् | सूत्रसङ्ख्या | | | पार्श्वम् |
|---|---|---|---|---|
| औ सुलोपश्च | ६ | ४ | ७४ | २७६ |
| कंशंभ्याम् | ५ | २ | २१४ | ७७ |
| कंसार्धाभ्यां ठिन् | ५ | १ | ५ | १ |
| ककुत् ककुदस्यावस्थायाम् | ५ | ४ | १७२ | १४६ |
| कच्छ्वा ह्रस्वश्च | ५ | २ | १५७ | ६० |
| कटच | ५ | २ | ३२ | ४६ |
| कण्डकमुलक—' | ५ | २ | ४४ | ४१ |
| कण्ड्वादीनां—' | ६ | १ | ११ | १५२ |
| कसैश्च | ५ | | २१ | ३ |
| कन्दलदौबल—' | ५ | २ | ५५ | ५० |
| कपाले हविषि | ६ | २ | ६६ | २०५ |
| कपिशादिभ्यो ढक् | ५ | १ | १३५ | ३७ |
| कपिष्ठाधिरथ—' | ६ | २ | १६२ | २२३ |
| कमलसरोरुह—' | ५ | २ | १३४ | ७४ |
| कर्कलोहिता—' | ५ | ३ | १४७ | ११ |
| कर्णाक्षिनख—' | ५ | ३ | २७ | ४६ |
| कर्णे पिहरय—' | ६ | २ | १७० | २२४ |
| कर्मण सञ्कम् | ५ | १ | १२३ | २२ |
| कर्मवेषाभ्यां यत् | ५ | १ | १०६ | २१ |
| कलापिकुथुमि—' | ६ | ३ | १४१ | २५५ |
| कर्षं चोन्ने | ६ | २ | १४६ | २२१ |
| काण्डाण्डाभ्यामीरन् | ५ | २ | १६३ | ६८ |
| कादेर्बहुलं | ६ | ३ | १५१ | २०७ |
| का पथ्यक्षयोः | ६ | २ | १४३ | २२० |
| कारस्करो वृक्षे | ६ | १ | १५५ | १८४ |
| कार्षापण—' | ५ | १ | ३६ | ४ |
| कार्षापणात्—' | ५ | १ | ६ | |
| कालहेतु—' | ५ | २ | ११३ | ८ |
| कालात् | ५ | ४ | ११ | १६० |
| ,, | ५ | १ | ७७ | १६ |
| कालात् कार्ये—' | ५ | १ | १०२ | १० |
| कालाप्यत् | ५ | १ | ११६ | १२ |

| सूत्रम् | सूत्रसङ्ख्या | | | पार्श्वम् |
|---|---|---|---|---|
| क्षयाशास—' | ६ | ३ | ५५ | २१८ |
| क्षुतृड्बुभुक्षा—' | ५ | २ | ५६ | ५० |
| क्षुद्रजन्तूपतापेभ्यश्च | ५ | २ | १३२ | ६३ |
| क्षुधिवसि—' | ६ | ४ | ११८ | २८५ |
| क्षुब्धस्वान्त—' | ६ | ४ | १६० | २९४ |
| क्षेत्रियच् परक्षेत्रे—' | ५ | २ | १२४ | ६० |
| क्षेः क्षी | ६ | ३ | ७१ | २४१ |
| खलगाश्विन्द्र—' | ५ | २ | १५६ | ६७ |
| खरखुराभ्यां नस् वा | ५ | ४ | १४८ | १४३ |
| खार्यां वा | ५ | ४ | ११७ | १३७ |
| खित्तीच एकाचोऽमः | ६ | २ | ४ | १८९ |
| खित्यनव्ययस्य | ६ | २ | ९३ | २१६ |
| ख्यत्यात्परस्य | ६ | १ | १३३ | १७० |
| गडुलदीन—' | ५ | १ | १४८ | ३१ |
| गणाधिभ्यो परद्ध: | ५ | १ | १५० | ३२ |
| गमखन—' | ६ | ३ | ९५ | २४६ |
| गमयम—' | ६ | ३ | ४६ | २३६ |
| गमहनजन—' | ६ | ४ | १०३ | २९९ |
| गमेरू च | ६ | ३ | ४७ | २३६ |
| गमेर्लिङ्यात्मने—' | ६ | ३ | ४१ | २३५ |
| गर्भादप्राणिनि | ५ | २ | ५८ | ५० |
| गवि युक्ते | ६ | २ | ६७ | २०५ |
| गव्यूतिकिल्बिष—' | ६ | १ | ८८ | १६० |
| गाङ् क्ङिति | ६ | ४ | १०२ | २८२ |
| गाण्डयजगाभ्यां—' | ५ | २ | ११६ | ५८ |
| गायियिदापि—' | ६ | ३ | १०९ | २६१ |
| गिरिनदी—' | ५ | २ | १२७ | १३९ |
| गुणः स्यन्दू—' | ६ | २ | ४१ | १९६ |
| गुणवचनेभ्यो—' | ५ | १ | १४३ | ३० |
| गुणहादौ—' | ६ | ४ | ४९ | २६९ |
| गोत्रचरणाच्छ्लाघा—' | ५ | १ | १८० | ४० |
| गोमिन् पूज्ये | ५ | [illegible] | १०४ | [illegible] |

| सूत्रम् | सूत्रसङ्ख्या | | | पार्श्वम् |
|---|---|---|---|---|
| चरणे ब्रह्मचारिणि | ६ | २ | १२६ | २९७ |
| चरिचलि—' | ६ | १ | १४ | १५२ |
| चर्मणः कोशे | ६ | ३ | १४३ | २५६ |
| चातुर्मास्येभ्यो—' | ५ | १ | ९८ | १९ |
| चातुर्वर्ण्य—' | ५ | १ | १६० | ३५ |
| चायः की | ६ | १ | ३५ | १५७ |
| चिण्णमुलो—' | ६ | ४ | ९३ | २६७ |
| चितेः कपि | ६ | २ | १७४ | २२४ |
| चित्तवति नित्यम् | ५ | १ | ८९ | १८ |
| चिस्फुरोर्णौ | ६ | १ | ५४ | १६३ |
| चूडाभद्रादिभ्योऽण् | ५ | १ | १२१ | २३ |
| चौ | ६ | २ | १८४ | २२५ |
| छकारकयोरन्त्यस्य लुक् | ६ | २ | १३७ | २३९ |
| छेदभेद—' | ५ | १ | ५९ | १३ |
| जनपदेभ्यो नित्यम् | ५ | ४ | १२० | १३८ |
| जनसनखनामात् | ६ | ३ | ३६ | २३५ |
| जटाघटाकालाभ्यः क्षेपे | ५ | २ | १४० | ६४ |
| जटाघटाभ्यां क्षेपे | ५ | २ | १३१ | ६२ |
| जनीनीडिभ्यः सेध्वयोः | ६ | ४ | १५० | ३०१ |
| जपिपस्त्राथसि—' | ६ | ४ | १५९ | २९४ |
| जरायां जरश्च | ५ | ४ | १२४ | १३५ |
| जराया जरस् वा | ६ | ४ | ६९ | २७५ |
| जातिनाम्नः कन् | ५ | ३ | १०८ | १०३ |
| जातिरयच् तद्धिते | ६ | २ | ५१ | १९९ |
| जातेरतण्डुलादेः | ५ | २ | १७३ | ५० |
| जातौ प्रिय—' | ५ | ४ | १० | ११८ |
| जात्यन्ताच्छ बन्धुनि | ५ | ४ | ३४ | १२१ |
| जान्तनशामनिटि | ६ | ३ | ७१ | २३७ |
| जीर्णोच्छालिषु | ५ | ३ | ५९ | ८८ |
| जीवनस्य सूते धादेः | ६ | २ | १५० | २२१ |
| जीविकार्थे—' | ५ | ३ | १३२ | १०८ |
| जीवितस्य च | ५ | १ | ४० | ९ |

